ध्वन्यालोकः

लक्षणेऽन्यैः कृते चास्य पक्षसंसिद्धिरेव नः ॥ २२ ॥

कृतेऽपि वा पूर्वमेवान्यैर्ध्वनिलक्षणे पक्षसंसिद्धिरेव नः, यस्माद्ध्वनिरस्तीति नः पक्षः। स च प्रागेव संसिद्ध इत्ययत्नसंपन्नसमीहितार्थाः संपन्नाः स्मः। येऽपि

लोचनम्

चास्माभिः सम्यङ्निरूपितम्, तथापि को दोष इत्यभिप्रायेणाह—किं च लक्षणेऽन्यैरिति॥ प्रागेवेति॥ अस्मत्प्रयत्नादिति शेषः। एवं त्रिप्रकारमभाववादम्, भाक्तत्वं च निराकुर्वतालक्षणीयत्वमेतन्मध्ये निराकृतमेव। अत एव मूलकारिका साक्षात्तन्निराकरणार्था न श्रूयते। वृत्तिकृत्तु निराकृतमपि प्रमेयशय्यापरिपूरणाय स्वकण्ठेन तत्पक्षमनूद्य निराकरोति—येऽपीत्यादिना॥ उक्तया नीत्या 'यत्रार्थः शब्दो वा—' इति

कौमुदी

स्वरूपविषयविवादाभावे सति केवलं लक्षणकरणविवादे दौर्जन्यमुद्रामात्रमार्जयन्ति। लक्षणस्य कृतत्वे तत्सम्यक्त्वसिद्धिः, अकृतत्वे पुनस्तदुन्मीलनमेव तावद् प्रयोजनपदवीमधिशेते। सर्वथा तु जितमेवास्माभिरित्यर्थः॥

ननु कारिकायामितरपक्षद्वयवदलक्षणीयत्वपक्षः किमिति न प्रायक्षेपीत्याशङ्क्य प्रतिक्षेपाभावोऽसिद्ध इत्याह—एवमिति॥ ध्वनिस्वरूपप्रदर्शनमुखेन हि पक्षान्तरनिराकरणमत्र कृतम्। न च तदलक्षणीयत्वे तस्य संभवतीति तन्निराकरणनान्तरीयकत्वेनालक्षणीयत्वपक्षोऽपि निराकृत इत्यर्थः। यद्यपृथग्यत्नसिद्धत्वात् कारिकायां तन्निराकरणाभावः तर्हि वृत्तिकृतोऽपि तन्निरासो व्यर्थ इति आह—वृत्तिकृत्त्विति॥ प्रमेयशय्या प्रमेयसन्निवेशविशेषः। 'उक्तया नीत्या' 'वक्ष्यमाणया' इति च द्वयं क्रमेण सामान्यविशेषलक्षणविषयमिति दर्शयन्नदसीयं क्षेत्रमाह—यत्रेति॥ भविष्यतीति कथनरूपक्रियाविशेषपरतया व्याख्येयम्। यदि वा लक्षणशब्दस्तद्विषयवचनलक्षणपरः॥

ध्वन्यालोकः

हृदयहृदयसंवेद्यमनाख्येयमेव ध्वनेरात्मानमाम्नासिषुः, तेऽपि न परीक्ष्यवादिनः ; यत उक्तया नीत्या वक्ष्यमाणया च ध्वनेः सामान्यविशेषलक्षणे प्रतिपादितेऽपि

लोचनम्

सामान्यलक्षणं प्रतिपादितम्। वक्ष्यमाणया तु नीत्या विशेषलक्षणं भविष्यति 'अर्थान्तरे संक्रमितम्' इत्यादिना । तत्र प्रथमोद्द्योते ध्वनेः सामान्यलक्षणमेव कारिकाकारेण कृतम् । द्वितीयोद्द्योते तु कारिकाकारोऽवान्तरविभागं विशेषलक्षणं च विदधदनुवादमुखेन मूलविभागं द्विविधं सूचितवान् । तदाशयानुसारेण तु वृत्तिकृत्तत्रैवोद्द्योते मूलविभागमवोचत् ।

कौमुदी

नन्वविवक्षितवाच्यविवक्षितान्यपरवाच्यप्रभेदद्वयस्यापि सोदाहरणस्यात्र प्रदर्शितत्वात् 'उक्तया नीत्या सामान्यलक्षणं प्रतिपादितम्' इत्युक्तमयुक्तमित्याशङ्क्य, सत्यम् वृत्तिकृता हि तत्कृतम् ; कारिकाकाराभिप्रायेण त्वियमुक्तिरित्याह—तत्र प्रथमोद्द्योत इति ॥ द्वितीयोद्द्योतस्यातिसन्निहितत्वात्तत्रस्थस्यैवायमाचार्यस्य प्रथमोद्द्योते इति व्यपदेशः । तर्हि कारिकाकारानुक्तस्य मूलविभागस्य प्रथमोद्द्योते सामान्यलक्षणसन्निधौ वृत्तिकृतोऽभिधानमयुक्तमित्यत आह—द्वितीयोद्द्योते त्विति ॥

"अर्थान्तरे संक्रमितमत्यन्तं वा तिरस्कृतम् ।
अविवक्षितवाच्यस्य ध्वनेर्वाच्यं द्विधा मतम् ॥"

इति कारिकयावान्तरविभागः नाम्नोऽन्वर्थतया विशेषलक्षणं च विहितम् । तत्र च अविवक्षितवाच्यस्येत्ययमंशोऽनुवादरूपः, योऽयमविवक्षितवाच्यविवक्षितान्यपरवाच्ययोर्मध्येऽविवक्षितवाच्यो नाम प्रभेदस्तस्येत्येवं वचनव्यक्तिसमुन्मेषात् ; तेन च प्रथमोद्द्योत एव सामान्यलक्षणवन्मूलविभागस्यापि तत्सन्निधावेव प्रसिद्धतां कारिकाकारोऽभिसंहितवानेवेत्यवगच्छामः, पूर्वमसिद्धस्य पश्चादनुवादासंभवात् ; तदभिप्रायप्रदर्शनार्थोऽयं वृत्तिकृतोऽत्र द्वैविध्योपन्यास इति नासङ्गतिरित्यर्थः । सर्वशब्दस्य काव्यव्यतिरिक्तलोकशास्त्रविषयसंकोचमाह—

१. क. ख. 'तु' नास्ति ।
२. ङ. ध. 'तेनात्र'
३. ग. ङ. च. 'द्वितीये तूद्द्योते'
४. ग. च. 'अवान्तरभागम्'
५. क. ख. 'सूचितम्'
६. घ. 'तु' नास्ति ।
७. क. ख. 'वृत्तिर्यदत्र'
८. ग. 'मूलभागम्'

ध्वन्यालोकः

यद्यनाख्येयत्वं तत्सर्वेषामेव वस्तूनां तत्प्रसक्तम् । यदि पुनर्ध्वनेरतिशयोक्त्यानया काव्यान्तरातिशायि तैः स्वरूपमाख्यायते तत्तेऽपि युक्ताभिधायिन एव ॥

## इति श्रीराजानकानन्दवर्धनाचार्यविरचिते ध्वन्यालोके प्रथम उद्द्योतः ॥

---

लोचनम्

'स च द्विविधः'[1] इति ॥ सर्वेषामेवेति[2] ॥ लौकिकानां शास्त्रीयाणां चेत्यर्थः ॥ अतिशयोक्त्येति ॥ यथा 'तान्यक्षराणि हृदये किमपि स्फुरन्ति' इति[3] । अतिशयोक्त्या अनाख्येयतोक्त्या, सारूपैतां प्रतिपादयितुं दर्शितम् । इति शिवम् ॥

कौमुदी

लौकिकानामिति ॥ अतिशयोक्तेरुदाहरणमाह—यथेति ॥ अतिशयोक्तिरत्रालङ्कार इति [इति न] मन्तव्यमित्याह—'अनाख्येयतोक्त्येति ॥ अतिशयो वचनगोचरातिवर्तित्व-रूपोऽत्र विवक्षितः । तस्योक्तिरतिशयोक्तिः । नन्वनाख्येयत्वमसत्वात् नृशृङ्गादिवदपि संभावनास्पदमिति, कथं काव्यान्तरातिशायित्वं युक्ताभिधायित्वं चेत्याशङ्क्याह—सार-रूपतामिति ॥ काव्यात्मत्वेनास्मदभिमतस्य ध्वनेः 'साररूपत्वमेव प्रतिपादयितुमियमना-ख्येयतोक्तिरिति "यदि पुनः" इति वृत्तिग्रन्थेन पराभिप्रायानुभाषणपरेण प्रदर्शितमिति योजना । इदानीमात्मीयं प्रथमोद्द्योतव्याख्यानरूपं विशिष्टवाङ्मनसव्यापारं परशिवस्वरूप एव समर्पयन्नुपसंहरति—इति शिवमिति ॥ यदेतत्काव्यालोकव्याख्यानं तद्वस्तुतः शिवात्मकमेव, तत्प्रसूतत्वात् शिवस्वरूपाभिन्नत्वात्, परम्परया तत्प्राप्तिहेतुत्वाच्च ॥

संप्रति संभावनाप्रत्ययसंपादनेन श्रोतृजननिराशङ्कप्रवृत्तिसिद्धये निजनामधेय-निगदनपूर्वकं पौर्विककाव्यालोकव्याख्यानविशेषातिशयालुसौभाग्यभाजनतया विद्वज्जनो-

१. ग. 'अतिशयितम्'
२. क. ख. ग. 'एव' नास्ति ।
३. क. ख. 'लौकिकीयानां शब्दानां शास्त्रीयाणां'
४. क. ख. ग. 'यथा'
५. ग. 'हृदिवदतिशय'
६. क. ख. ग. 'दोष'
७. क. ख. 'सारभूतां'
८. क. ख. ग. घ. 'इदिशव्' नास्ति ।

# सूच्यः[1]

## ध्वन्यालोकमूलकारिकासूची



१. इमाः सूच्यः शङ्कर् के. रायेण सम्पादिताः ।

## वृत्तिगतश्लोकसूची



## वृत्त्युदाहृतश्लोकसूची

# लोचनस्थोदाहरणादिसूची

## लोचनस्मृतग्रन्थग्रन्थकृतां सूची



## कौमुद्युदाहृतश्लोकादिसूची

* अलङ्कारसर्वस्वसूत्रवृत्त्योः कर्तृविषये विसंवादो दृश्यते । अनन्तशयनमुद्रितपुस्तके समुद्रबन्धव्याख्याया मूलसूत्राणां रुय्यकः, वृत्त्याः तच्छिष्यो मङ्खुकः कर्तेति दृश्यते । कौमुद्यां तु अनेकत्र सूत्राणि मङ्खुकनामोदाहरणपूर्वं निर्दिष्टानि, वृत्तिश्च २०१ पृष्ठे तथैव मङ्खुकनाम्ना उदाह्रियते ॥

## उपलोचनोदाहृतग्रन्थग्रन्थकृतां सूची

